स चित्तनिरोधसीमानमपि समाक्रामति। जीवस्य अन्तिमलक्ष्यभूतस्य कैवल्यस्य अयमेव पन्थाः।

अत एव कोस्टर-पालब्रंटन-सरअलेक्जेण्डर-केननप्रभृतयः पाश्चात्त्य-विपश्चित एकस्वरेण कथयन्ति यत् पाश्चिमात्यं मनोविज्ञानं यत्र परिसमाप्यते, तत एव भारतीयमनोविज्ञानस्य श्रीगणेशः—

Indian Psychology begins where Western Psychology ends'[1]

## वैज्ञानिकानां दृष्टिः

कतिपये वैज्ञानिकाः योगस्य चमत्काराणां गभीरमध्ययनं विदधति। तैः नैकैः प्रयोगैस्तेषां विश्लेषणं चेष्टितम्, अन्ते च योगस्य महत्त्व प्रामाणिकतया स्वीकृतम्। एतेषु डाक्टर एलेक्सिस कारेल, हैरी प्राइस, प्रोफेसर जोरनेल, डाक्टर रिचेट, डाक्टर ओस्टी, सर ओलिवर लाज, सर विलियम क्रुकूस, डाक्टर जेम्स, डाक्टर राइन, डाक्टर मैकडूगल एवमाद्याः प्रमुखाः सन्ति[2]।

किन्तु वैज्ञानिकेष्वपि सङ्कुचितवृत्तीनां नाल्पता। एतादृशाः सत्यं सत्यत्वेन स्वीकर्तुं त्रसन्ति। अत एव बेकननामकेन पाश्चात्त्येन कदापि न स्वीकृतं यत् पृथ्वी सूर्यस्य परितः परिभ्रामतीति। एतदेव तत्त्व प्रकटयितुं गैलीलियो-महाशयस्य कृते कारावासः समापतितः। सर विलियम बैरेट-महाशयेन 'ब्रिटिश एसोसियेशन'संस्थायाः पुरतः Thought Transference (विचाराणामेकतः अपरत्र परिनयनम्) विषये एको निबन्धः पठितः, परं संस्थया तया तस्य प्रकाशनं नानुमतम्। सर विलियमक्रुकूस-महाभागेन 'रायल सोसाइटी'-संस्थाया मन्त्री निवेदितो यत् स Psychical Research Society (साइकिकल रिसर्च सोसाइटी) संस्थायाः अधिवेशने समागच्छतु इति, परं यस्तेन सोऽनु-

---

१. वि० म० भट : यौगिक पावर्स एण्ड गॉड रियलाइजेशन, पृ० ६४।

२. तत्रैव, पृ० २२-२३।

रोधः सावहेलमस्वीकृतः। 'फिफ्टी ईयर्स ऑफ साइकिकल रिसर्च'-ग्रन्थस्य लेखकेन हैरीप्राइस-महोदयेन यदा 'लन्दन-विश्वविद्यालयः' अनुरुद्धो यत् भवत्संस्थाने विषयस्यास्य अन्वेषणव्यवस्था भाव्या इति, तदा 'लन्दन-टाइम्स'पत्रे 'भूतानामध्ययनम्' ( chair in Ghosts ) इत्युक्त्वा विचारस्यास्य उपहासोऽक्रियत।

किन्तु एतादृशाः सङ्कुचिता व्यवहारा न चिरस्थायिनः। अन्ते सत्यस्य प्रकटनं सुनिश्चप्रचम्। सम्प्रति यूरोपीयेषु अमेरिकीयेषु च नैकेषु विश्वविद्यालयेषु विषयाणामेतेषां सर्वेषां गवेषणस्य व्यवस्था सम्पन्ना, सम्पद्यते सम्पत्स्यते च। निखिलेऽपि विश्वस्मिन् पक्षपातशून्यज्ञानस्य गवेषणम् अद्यतनीयमावश्यकं वृत्तम्।

भारतीयोगस्य परिज्ञानं नितरां दुरूहम्। अद्यावधि पाश्चात्त्यैर्यथावत् एष नावगतः। विषय एवायम् एतादृशो यदस्य कृते भगवता श्रीकृष्णेन गीतायां स्फुटमुक्तम्—

'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।' इति।

निरहङ्कारभावेन वास्तविक-जिज्ञासुवृत्त्यैव योगसदृशस्य दुरूह-विषयस्य अध्ययनं करणीयम्। 'थियासफी'-सम्प्रदायस्य सुख्यातैः विद्वद्भिः— मैडम ब्लावट्सकी, डाक्टर एनी बेसेंट, कर्नल अलकाट, पादरी लीडबीटर आदिभिः—योगविषयमधिकृत्य अनेके आश्चर्यप्रदा अनुभवाः समुल्लिखिताः। अर्नेस्टवुडसदृशैः कतिपयैः विद्वद्भिः विषयेऽत्र सुबहु प्रयतितम्। तेषां 'योग'–'प्रैक्टिकलयोग-'कन्सेण्ट्रेशन'-प्रभृतिग्रन्थेषु योग-सम्बद्धा अनेके साधीयांसो विचाराः सन्तीति प्रामाणिकतया अस्माभिः स्वीकरणीयम्। भ्रमश्च सद्भावपुरस्सरं निराकरणीयः। तदैव योगसदृशेन परमोपयोगिना शास्त्रेण मानवताया शुभ भवेदिति।

सम्पादकः, प्रकाशकः, मुद्रकश्च : गोविन्द नरहरि वैजापुरकरः, श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैन्ट।
मुद्रण-स्थलम् : मनोहर प्रेस, जतनबर, वाराणसी।
आवरणपृष्ठमुद्रक : खण्डेलवाल प्रेस, वाराणसी।
मुखपृष्ठचित्रकार : बैजनाथ वर्मा, वाराणसी।

  

## सूर्योदयस्य नियमाः

१. 'सूर्योदय-मासिकपत्रस्य वार्षिकं मूल्यं धनादेश ( मनीआर्डर )-द्वारैव प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीन-ग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अंकतः ) एव स्वीकृतं भवति। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य प्रथमदिनाङ्के 'सूर्योदयः' प्रकाशितो भवति, परं तत्प्रेषणं द्वित्रिदिवसैः अर्वागेव जायते। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निश्चयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय--चिटिका ( टिकट )-प्राप्त्यनन्तरं परावर्तयितुं शक्यन्ते।

५. सूर्योदय'स्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते।

६. सूर्योदय-सम्बद्धः कीदृशोऽपि पत्र-व्यवहारः 'सूर्योदय-कार्यालयः, श्रीभारतधर्ममहामण्डलम्, जगत्गंज, वाराणसी' इति सङ्केतेन करणीयः। सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।